# अद्वयतारकोपनिषत्

॥ श्रीः ॥ उपनिषद्ब्रह्मयोगिविरचितं विवरणम् श्रीमदप्पयशिवाचार्यविरचितभाष्योपेता

**Invocation**

ॐ पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥
ॐ शान्तिः शान्तिः शान्तिः ।

**Text**

व्याख्येयो विषयः तदधिकारी च

**Ed. II. taarakayogaadhikaaraH .**

अथातोऽद्वयतारकोपनिषदं व्याख्यास्यामः । यतये जितेन्द्रियाय शमादिषड्गुणपूर्णाय ॥ १॥

**Commentary I.**

श्रीमद्विश्वाधिष्ठानपरमहंससद्गुरुरामचन्द्राय नमः
द्वैतासम्भवविज्ञानसंसिद्धाद्वयतारकं ।
तारकब्रह्मेति गितं वन्दे श्रीरामवैभवं ॥
इह खलु शुक्लयजुर्वेदप्रविभक्तेयं अद्वयतारकोपनिषत् राजयोगसर्वस्वं प्रकटयन्ती ब्रह्मात्रपर्यवसन्ना दृश्यते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । अत्र यथोक्ताधिकार्युद्देशेन श्रुतयः तारकयोगमुपदिशन्तीत्याह -- अथेति ॥ अथ कर्मोपासनाकाण्डद्वयनिरूपणानन्तरं यतः तेन पुरुषार्थासिद्धिः अतः तदर्थं यत्र स्वातिरेकेण द्वयं न विद्यते तत् अद्वयं ब्रह्म तन्मात्रबोधिनी विद्या तारकोपनिषत् तां श्रुतयो वयं व्याख्यास्यामः । कस्मा अधिकारिण इत्यत आह -- यतय इति । स्वाश्रमानुष्ठनपूर्वकं देशिकंउखतो वेदन्तश्रवणं ततो युक्तिभिः श्रुत्यविरुद्धाभिः मननं च कृत्वा निदिध्यसानाय यतत इति यतिः । अजितेन्द्रियस्य यतित्वं कुत इत्यत आह -- जितेन्द्रियायेति । जितेन्द्रियस्य यतित्वोपपत्तेः । अरिषड्वर्गाक्रान्तस्य जितेन्द्रियता कुत इत्यत आह -- शमादिषड्गुणपूर्णायेति । शमादिषड्गुणसम्पत्तेः अरिषड्वर्गोपरतिपूर्वकत्वात् । एवं साधनवते श्रुतयः तारकयोगमुपदिशन्तीत्यर्थः ॥ १॥

**Text**

योगोपाय तत्फलम्

**Ed. II. yogaanushhThaanaM tatphalaM cha .**

चित्स्वरूपोऽहमिति सदा भवयन् सम्यङ्निमीलिताक्षः किञ्चिदुन्मीलिताक्षो वाऽन्तर्दृष्ट्या भ्रूदहरादुपरि सच्चिदानन्दतेजःकूटरूपं परं ब्रह्मावलोकयन् तद्रूपो भवति ॥ २॥

**Commentary I.**

एवं निदिध्यसानोपायतत्फलमाह -- चिदिति ॥ योगी स्वान्तः चिद्रूपोऽस्मीति भवयनर्धोन्मीलितलोचनः भ्रूमध्यादौ सच्चिदानन्दमात्रं ब्रह्माहमस्मीत्यालोकयन्तद्रूपस्तारकरूपो भवति ॥ २॥

**Text**

अद्वयतारकपदार्थौ

गर्भजन्मजरामरणभयात्संतारयति तस्मात्तारकमिति । जीवेश्वरौ मायिकाविति विज्ञाय सर्वविशेषं नेति नेतीति विहाय यदवशिष्यते तदद्वयं ब्रह्म ॥ ३॥

**Commentary I.**

किं तारकमित्यताह -- गर्भेति ॥ ज्योतिर्लिङ्गं भ्रुवोर्मध्ये नित्यं ध्यायेत्सदा यतिः । इति श्रुतिसिद्धज्योतिर्लिङ्गस्य प्रत्यग्रूपत्वेन स्वाज्ञविकल्पितगर्भासादिसंसारतारकत्वात्तारकं प्रत्यगात्मेत्यर्थः । जीवेशभेदे सति प्रत्यगभिन्नब्रह्मभावः कुत इत्याशङ्क्य तयोर्भेदस्य मायिकत्वेन मिथ्यात्वात्ततो यच्छिष्यते तदेव ब्रह्मेत्याह -- जीवेति ॥ ३॥

**Text**

लक्ष्यत्रयानुसन्धानविधिः

**Ed. II. tadadhigamopaayaH**

तत्सिद्ध्यै लक्ष्यत्रयानुसंधानं कर्तव्यं ॥ ४॥

**Commentary I.**

तदधिगमोपायः कथमित्यत आह तत्सिद्ध्या इति ॥ ४॥

**Commentary II.**

परिच्छिन्नज्योतीरूपलक्ष्यानुसन्धानस्यापि चित्तशुद्धिफलकत्वम्

मूर्तामूर्तात्मकं यत्र तारकद्वयमुच्यते । ज्योतिर्दर्शनमार्गोक्तिं व्यख्यास्येऽद्वयतारकं ॥

ननु -- जीवेश्वरौ मायिकाविति विज्ञाय सर्वविशेषं नेति नेतीति विहाय यदवशिष्यते तदद्वयं ब्रह्म इति यदुक्तं तद् युक्तमेव । अपि तु -- तत्सिद्ध्यै लक्ष्यत्रयानुसंधानं कर्तव्यं इत्येतदयुक्तं । कुतः लक्ष्यत्रयस्य च देहान्तर्गतत्वेन परिच्छिन्नज्योतिःस्वरूपतया स्वयमपरिच्छिन्नत्वाभावात् । अद्वयब्रह्म हि अपरिच्छिन्नं महाकाशवत् प्रसिद्धं । तत्सिद्ध्यै परिच्छिन्नलक्ष्यत्रयानुसन्धानं कथं साधनं स्यात् । अपरिच्छिन्नब्रह्मसिद्ध्यै हि अपरिच्छिन्नब्रह्मध्यानं कर्तव्यं । अतः इह विरुद्धमुक्तिमिति चेत् -- सत्यमेवैतत् । तथापि उक्तलक्ष्यत्रयानुसन्धानद्वारा संशुद्धचित्तस्यैव वाक्यार्थश्रवणमननसंस्कृतान्तःकरणवशीकरणपूर्वकाप अरिच्छिन्न-ब्रह्मात्मैक्यानुसन्धानकरणसामर्थ्यसंभवात् । अन्यथा देहमध्यगतज्योतिर्दर्शनहीनत्य वाक्यादिश्रवणादिप्रवृत्त्यसंभवाच्च परिच्छिन्नानुसन्धानं युक्तिमित्यनुसन्धानं ॥ १-४॥

**Text**

अन्तर्लक्ष्यलक्षणम्

देहमध्ये ब्रह्मनाडी सुषुम्ना सूर्यरूपिणी पूर्णचन्द्राभा वर्तते । सा तु मूलाधारादारभ्य ब्रह्मरन्ध्रगामिनी भवति । तन्मध्ये तटित्कोटिसमानकान्त्या मृणालसूत्रवत् सुक्ष्माङ्गी कुण्दलिनीति प्रसिद्धाऽस्ति । तां दृष्ट्वा मनसैव नरः सर्वपापविनाशद्वारा मुक्तो भवति । फालोर्ध्वगललाटविशेषमण्डले निरन्तरं तेजस्तारकयोगविस्फुरणेन पश्यति चेत् सिद्धो भवति । तर्जन्यग्रोन्मीलितकर्णरन्ध्रद्वये तत्र फूत्कारशब्दो जायते । तत्र स्थिते मनसि चक्षुर्मध्यगतनीलज्योतिस्स्थलं विलोक्य अन्तर्दृष्ट्या निरतिशयसुखं प्राप्नोति । एवं हृदये पश्यति । एवमन्तर्लक्ष्यलक्षणं मुमुक्षुभिरुपास्यं ॥ ५ ॥

## Commentary I.

अन्तर्बाह्यमध्यभेदेन लक्ष्यं त्रिविधं । तत्र अन्तर्लक्ष्यलक्षणं तदभ्यासफलं चाह -- देहेति ॥ यदा कुण्डलिनी प्राणदृष्टिमनोग्निभिः मूलाधारत्रिकोणाग्रालङ्कारसुषुम्नाऽधोवक्त्रं विभिद्य तन्मध्ये प्रविशति तदा बाह्यान्तःप्रपञ्चविस्मरणपूर्वकं मुन्यन्तःकरणं निर्विकल्पब्रह्मपदं भजति । मुनिः निर्विकल्पज्ञानात् विकल्पात् मुक्तो भवतीत्यर्थः । तत्सिद्ध्युपायः कः इत्यत आह -- फालेति । तद्गतसुखानुभवोपायं वदन् अन्तर्लक्ष्यं उपसंहरति -- तर्जनीति । सुखं प्राप्नोति न केवलं कर्णरन्ध्रद्वये एवं हृदये ॥ ५ ॥

## Text

बहिर्लक्ष्यलक्षणम्

अथ बहिर्लक्ष्यलक्षणं । नासिकाग्रे चतुर्भिः षड्भिरष्टभिः दशभिः द्वादशभिः क्रमात् अङ्गुलालन्ते नीलद्युतिश्यामत्वसदृग्रक्तभङ्गीस्फुरत्पीतवर्णद्वयोपेतं व्योम यदि पश्यति स तु योगी भवति । चलदृष्ट्या व्योमभागवीक्षितुः पुरुषस्य दृष्ट्यग्रे ज्योतिर्मयूखा वर्तते । तद्दर्शनेन योगी भवति । तप्तकाञ्चनसङ्काशज्योतिर्मयूखा अपाङ्गान्ते भूमौ वा पश्यति तद्दृष्टिः स्थिरा भवति । शिर्षोपरि द्वादशाङ्गुलसमीक्षितुः अमृतत्वं भवति । यत्र कुत्र स्थितस्य शिरसि व्योमज्योतिर्दृष्टं चेत् स तु योगी भवति ॥ ६ ॥

## Commentary I.

बहिर्लक्ष्यलक्षणमाह -- अथेति । योगी भवति इत्यादिकृत्स्नोपनिषत् प्रायशो मण्डलब्राह्मणोपनिषद्व्याख्यानेन व्याख्यातं स्यादिति मन्तव्यं ॥ ६ ॥

## Text

मध्यलक्ष्यलक्षणम्

अथ मध्यलक्ष्यलक्षणं प्रातश्चित्रादिवर्णाखण्डसूर्यचक्रवत् वह्निज्वालावलीवत् तद्विहीनान्तरिक्षवत् पश्यति । तदाकाराकारितया अवतिष्ठति । तद्भूयोदर्शनेन गुणरहिताकाशं भवति । विस्फुरत्तारकाकारदीप्यमानगाढतमोपमं परमाकाशं भवति । कालानलसमद्योतमानं महाकाशं भवति । सर्वोत्कृष्टपरमद्युतिप्रद्योतमानं तत्त्वाकाशं भवति । कोटिसूर्यप्रकाशवैभवसङ्काशं सूर्याकशं भवति । एवं बाह्याभ्यन्तरस्थव्योमपञ्चकं तारकलक्ष्यं । तद्दर्शी विमुक्तफलस्तादृग्व्योमसमानो भवति । तस्मात्तारक एव लक्ष्यममनस्कफलप्रदं भवति ॥ ७ ॥

## Commentary I.

अन्तर्बाह्यलक्ष्यस्वरूपमुक्त्वा मध्यलक्ष्यस्वरूपमाह -- अथेति । तद्दर्शी विमुक्तस्वाज्ञानतत्कार्यफलः । यस्मादेवं तस्मात् ॥ ७ ॥

## Commentary II.

उक्तानां लक्ष्यत्रयव्योम्नां भौतिकत्वशङ्का
नन्विह अन्तर्लक्ष्यबाह्यलक्ष्यमध्यलक्ष्यलक्षणेषु उच्यमानेषु नीलरक्तपीत्रचित्रादिवर्णयुक्तव्योमदर्शनानि अवगम्यन्ते । नैतैः दर्शनैः किञ्चिदपि मुमुक्षोः प्रयोजनं भवितुमर्हति । कुतः नानाविधज्योतिर्विषयकत्वेन भौतिकत्वात् । यदि ब्रह्मज्योतिर्दर्शनं स्यात्तदा क्रममुक्त्यै वा तत् उपयुक्तं स्यात् । न तु तदेतत् । ब्रह्मणः एवं नानाविधत्वाभावात् । भौतिकानि तु ज्योतींषि उपाधिभेदात् बहुविधानि भवितुमर्हन्ति । तस्मात् प्रपञ्चितलक्षणबहुविधज्योतिर्दर्शनानि सिद्ध्यर्थकानि स्युः । उपनिषदां वैयर्थ्यकल्पनानर्हत्वात् । इति चेत् --
तन्निरसनेन एषां मुमुक्षूपयोगित्वनिर्णयः
अत्रोच्यते । निर्विशेषस्य परस्य ब्रह्मण एव एतानि ज्योतींषि इति । कुतः भौतिकज्योतिषं देहाद्बहिः दर्शनीयत्वेन देहान्तदर्शनायोग्यत्वात् । प्रत्यगात्मज्योतिषः एकरूपत्वेऽपि विविधनाडीवन्नाडीसम्बन्धवशात् नानावर्णोपपत्तेः । यथा एकवृत्तिमानप्यात्मा नानानाडीसम्बन्धवशात् जाग्रत्स्वप्नसुषुप्त्यवस्थाविशेषैः नानाविधः अनुभूयते तद्वत् । यद्यपि एतेषां ज्योतिषाम्खण्डत्वेन दर्शनविषयत्वाभात् क्रममुक्त्यै परम्परया सद्योमुक्त्यै वा साधनत्वण स्यात् । न तु साक्षात् सद्योमुक्त्यै । न तु तावता सिद्ध्यार्थकानि मुमुक्षोः अनुपयुक्तानीति वक्तुं युक्तं ॥ ५-७॥

## Text

द्विविधं तारकम्
तत्तारकं द्विविधं पूर्वार्धं तारकमुत्तरार्धममनस्कं चेति । तदेष श्लोको भवेति --
तद्योगं च द्विधा विद्धि पूर्वोत्तरविधानतः । पूर्वं तु तारकं विद्यात् अमनस्कं तदुत्तरमिति ॥ ८॥

## Text

तारकयोगसिद्धिः

**Ed. II.** तारकयोगस्य सोमसूर्यैक्यदर्शनैकफलकत्वं ।

अक्ष्यन्तस्तारयोः चन्द्रसूर्यप्रतिफलनं भवति । तारकाभ्यां सूर्यचन्द्रमण्डलदर्शनं ब्रह्माण्डमिव पिण्डाण्डशिरोमध्यस्थाकाशे रवीन्दुमण्डलद्वितयमस्तीति निश्चित्य तारकाभ्यां तद्दर्शनं । अत्राप्युभयैक्यदृष्ट्या मनोयुक्तं ध्यायेत् तद्योगाभावे इन्द्रयप्रवृत्तेरनवकाशात् । तस्मातन्तर्दृष्ट्या तारक एवानुसंधेयः ॥ ९॥

## Commentary I.

ब्रह्माण्डवत् पिण्डाण्डेऽपि रवीन्दू विद्येते इति निश्चित्य तारकाभ्यां तदैक्यदर्शनतः तारकयोगसिद्धिः भवेदित्याह -- अक्षीति ॥
अयोगी यथा ब्रह्माण्डस्थचन्द्रसूर्यौ मनस्सहकृततारकाभ्यां पश्यति तथा योगी स्वमस्तकाकाशविभातरवीन्दुद्वयं मनस्सहकृतताराभ्यां अवलोकयेदित्यर्थः । रूपदर्शनस्य चक्षुरधीनत्वात् किं मनसेत्यत आह -- तदिति । मनसि अन्यत्र व्यापृते रूपादिग्रहणशक्तिः चक्षुरादेः नास्तीत्यत्र अन्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषमित्यादिश्रुतेः । यस्मादेवं तस्मात् ॥ ९॥

## Commentary II.

ननु निर्गुणाकाशं परमाकाशं महाकाशं तत्त्वाकाशं सूर्याकाशं चेति तारकलक्ष्यं आकाशपञ्चकमभिधीयते । अत्र कथं पूर्वोत्तरार्धविभागः इति । अत्रोच्यते । उभयैक्यदृष्ट्या मनोयुक्तं ध्यायेतिति तार एवानुसन्ध्येयः । इति च ध्यानयोगाभ्यासस्य विहितत्वात् । तदभ्यासकालः पूर्वार्धः तारकयोगसंज्ञकः तत्फलीभूतज्योतिर्दृशनकालः उत्तरार्धः अमनस्कयोगसंज्ञकः । एवमेव च आकाशपञ्चकदर्शने पूर्वोत्तरविभागो मन्तव्यः ॥ ९॥

**Text**

मूर्तामूर्तभेदेन द्विविधमनुसन्धेयम्
तारकं द्विविधं मूर्तितारकं अमूर्तितारकं चेति । यतिन्द्रियान्तं तत् मूर्तिमत् । यत् भ्रूयुगातीतं तत् अमूर्तिमत् । सर्वत्र अन्तःपदार्थविवेचने मनोयुक्ताभ्यास इष्यते । तारकाभ्यं तदूर्ध्वस्थसत्त्वदर्शनात् मनोयुक्तेन अन्तरीक्षणेन सच्चिदानन्दस्वरूपं ब्रह्मैव । तस्मात् शुक्लतेजोमयं ब्रह्मेति सिद्धं । तद्ब्रह्म मनःसहकारिचक्षुषा अन्तर्दृष्ट्या वेद्यं भवति । एवममूर्तितारकमपि । मनोयुक्तेन चक्षुषैव दहरादिकं वेद्यं भवति रूपग्रहणप्रयोचनस्य मनश्चक्षुरधीनत्वात् बाह्यवदान्तरेऽपि आत्ममनश्चक्षुःसंयोगेनैव रूपग्रहणकार्योदयात् । तस्मान्मनोयुक्ता अन्तर्दृष्टिः तारकप्रकाशाय भवति ॥ १०॥

**Commentary I.**

यदनुसन्धेयं तत् कतिविधमित्यत्र तत्तारकं ॥
बाह्यपदार्थविवेचनवत् अन्तःपदार्थविवेचनमपि मनश्चक्षुरधीनमित्याह -- सर्वत्रेति ।
तदूर्ध्वस्थसत्त्वदर्शनात् भ्रूमध्योर्ध्वविलसितोत्तरतारकलक्ष्यदर्शनात् । केनैतद्दर्शनीयमित्यत्र मनोयुक्तेनेति । ब्रह्मैव उत्तरतारकलक्ष्यमित्यनुसंधेयं । यस्मादेवं तस्मात् । भ्रूमध्यादिस्थलविलसित्शुक्लतेजसो मनःकल्पितत्वेऽपि ब्रह्मणः सर्वव्यापकत्वेन तत्रापि विद्यमानत्वात् तदेव ब्रह्मेति अभिमतिद्रढिम्ना लीने तत्र मनसि कल्पकसापेक्षकल्पनावैरळये निर्विकल्पकं ब्रह्मैव अवशिष्यते इत्यर्थः । यत्तेजो मनःकल्पितं तद्ब्रह्म । यस्मादेवं तस्मात् ॥ १०॥

**Commentary II.**

मूर्तितारकामूर्तितारकयोश्च इन्द्रयान्तभ्रूयुगातीतत्वकथनेन सगुणमूर्तिध्यानपरत्वं चावगन्तव्यं । सगुणमूर्तिध्यानस्य च निष्कामकृतस्य च क्रममुक्तिचित्तशुद्धिप्रयोजनतया सुप्रसिद्धत्वात् ॥ १०॥

**Text**

तारकयोगस्वरूपं
भ्रूयुगमध्यबिले दृष्टिं तद्द्वारा ऊर्ध्वस्थिततेज आविर्भूतं तारकयोगो भवति । तेन सह मनोयुक्तं तारकं सुसंयोज्य प्रयत्नेन भ्रूयुग्मं सावधानतया किञ्चिदूर्ध्वम्त्क्षेपयेत् । इति पूर्वतारकयोगः । उत्तरं तु अमूर्तिमतमनस्कमित्युच्यते । तालुमूलोर्ध्वभागे महान् ज्योतिर्मयूखो वर्तते । तत् योगिभिर्ध्येयं । तस्मातणिमादिसिद्धिर्भवति ॥ ११॥

**Commentary I.**

कोऽयं तारकयोग इत्यत्र भ्रूयुगमध्यबिले तत्रत्याज्ञाचक्रे दृष्टियुग्मं संनिवेश्य । सावधानतया विलोकयन् । ध्येयं तज्ज्योतिः ब्रह्मेति योगिभिश्चिन्त्यमित्यर्थः । ततः किं भवतीत्यत्र तस्मादिति ॥ ११॥

**Commentary II.**

प्रकृतयोगे पूर्णमनोविलयाभावेन दृश्यमानज्योतिषः प्रत्यगात्मस्वरूपत्वनिर्णयः
इदं ज्योतिः त्वंपदार्थः आहोस्वित् तत्पदार्थः इति संशीयते ।कुतः संशयः त्वंपदार्थविवेचन इति सच्चिदानन्दस्वरूपं ब्रह्मैवेति च उक्तत्वात् ।अत्रोच्यते ।त्वंपदार्थः प्रत्यगात्मैव ।ब्रह्मांशत्वात्तु ब्रह्मत्वमुपचर्यते साक्षाद्ब्रह्मयोगो हि मनोवियुक्ताभ्यासरूपः ।तत्रैव मनोनाशसम्भवात् । मनोयुक्ताभ्यासस्तु प्रकृतः कण्ठरवोक्तः ।मनस्सहकारिचक्षुषा वेद्यं भवतीति च ।यदि मनसैव वेद्यमित्युक्तं तदा अन्तर्दृष्टेः मनोऽनन्यत्वात् मनसः ब्रह्मणि विलयसम्भवाच्च अखण्डब्रह्मयोग एव विवक्षितः इति वक्तुं शक्यं ।न तु तदस्ति ।प्रत्यगात्मयोगे च आन्तरे बाह्यवत् आत्ममनश्चक्षुस्संयोगेनैव रूपग्रहणकार्योदयः स्यात् ।न तु ब्रह्मयोगे तदीयाखण्डसम्यग्दर्शनं चक्षुरधीनं मनोऽदीनं वा भवति ।चक्षुर्मनसी पृष्ठतः कृत्वा स्वयंप्रकशमानत्वात् ।ननु मनोयुक्तान्तर्दृष्टिरित्युक्तत्वात् मनसः अन्तर्दृष्टिद्वारा ब्रह्मणि विलय एव अर्थादवगम्यते इति चेन्न । बह्यवदित्युक्तत्वेन प्रकृतयोगे मनोविलयासम्भवात् ।तात्कालिकस्तु मनोलयः सुषुप्तस्येव नात्यन्त श्लाध्यतमो भवितुमर्हति ।यद्वा क्रममुक्तिसाधनीभूतोऽपि स मनोलयः पुनर्जन्मबीजभर्जनाभावात् न नाशापरपर्यायः इत्यवगन्तव्यं ॥११॥

### Text

शाम्भवीमुद्रा
अन्तर्बाह्यलक्ष्ये दृष्टौ निमेषोन्मेषवर्जितायां सत्यं सांभवी मुद्रा भवति ।तन्मुद्रारूढज्ञानिनिवासात् भूमिः पवित्रा भवति ।तद्दृष्ट्या सर्वे लोकाः पवित्रा भवन्ति ।तादृशपरमयोगिपूजा यस्य लभ्यते सोऽपि मुक्तो भवति ॥१२॥

### Commentary I.

यत्योगिभिः ध्येयमुक्तं पर्यवसाने तदेव सांभवी मुद्रा भवतीत्याह अन्तरिति ॥मुद्रा भवति इत्यत्र
अन्तर्लक्ष्यं बहिर्दृष्टिः निमेषोन्मेषवर्जिता ।
एषा सा शाम्भवी मुद्रा सर्वतन्त्रेषु गोपिता ॥
इति श्रुतेः ।तन्मुद्रारूढयोगिनं स्तौति -- तदिति ।पवित्रा भवति इत्यत्र स्वपादन्यासमात्रेण पावयन् वसुधातलं इति स्वरूपदर्शनोक्तेः ।पवित्रा भवन्ति --
खेचरा भूचराः सर्वे ब्रह्मविद्दृष्टिगोचराः ।
सद्य एव विमुच्यन्ते कोटिजन्मार्जितैरघैः ॥
इति श्रुतेः ॥१२॥

### Text

अन्तर्लक्ष्यविकल्पाः
अन्तर्लक्ष्यज्वलज्ज्योतिःस्वरूपं भवति ।परमगुरूपदेशेन सहस्रारज्वलज्ज्योतिर्वा बुद्धिगुहानिहितचिज्ज्योतिर्वा षोडशान्तस्थतुरीयचैतन्यं वा अन्तर्लक्ष्यं भवति ।तद्दर्शनं सदाचार्यमूलं ॥ १३॥

### Commentary I.

अन्तर्लक्ष्यं विकल्प्य निर्धारयति -- परमेति ॥उक्तविकल्पानां एकार्थपर्यवसायित्वात् तद्दर्शनमूलं किमित्यत्र -- तद्दर्शनमिति ॥१३॥

## Text

आचार्यलक्षणम्

आचार्यो वेदसंपन्नो विष्णुभक्तो विमत्सरः । योगज्ञो योगनिष्ठश्च सदा योगात्मकः शुचिः ॥ १४॥
गुरुभक्तिसमायुक्तः पुरुष्ज्ञो विशेषतः । एवं लक्षणसंपन्नो गुरुरित्यभिधीयते ॥ १५॥
गुशब्दस्त्वन्धकारः स्यात् रुशब्दस्तन्निरोधकः । अन्धकारनिरोधित्वात् गुरुरित्यभिधीयते ॥ १६॥
गुरुरेव परं ब्रह्म गुरुरेव परा गतिः । गुरुरेव परा विद्या गुरुरेव परायणं ॥ १७॥
गुरुरेव परा काष्ठा गुरुरेव परं धनं । यस्मात्तदुपदेष्टाऽसौ तस्माद्गुरुतरो गुरुरिति ॥ १८॥

## Commentary I.

आचार्यलक्षणमुक्त्वा गुरुशब्दार्थमाह -- गुशब्दस्त्विति ॥ १४-१८॥

## Commentary II.

परमात्मदर्शनाङ्गभूतप्रत्यगात्मदर्शनस्य सर्वथा अनुपेक्षणीयत्वोद्घोषः

नन्विह तादृशपरमयोगिपूजा यस्य लभ्यते सोऽपि मुक्तो भवतीति एतादृशानि वाक्यानि अर्थवादाः एवस्युः । कुतः सहस्रारज्वलज्ज्योतिर्वा -- इत्यादिवाक्योक्तदेहपरिच्छिन्नज्योतिर्मात्रे पर्यवसन्नायाः अस्याः उपनिषद आद्यन्तपर्यालोचनेऽपि अपरिच्छिन्नब्रह्मात्मैक्ययोगस्य क्वचिदपि अनुक्तत्वात् । इति चेत् -- अत्रोच्यते । सत्यमेवैतत् । त्वंपदलक्ष्यार्थसिद्ध्या अहंपदलक्ष्यार्थस्यापि सिद्धित्वेन कैमुतिकन्यायात् ब्रह्मपदार्थसिद्धेः कथं त्वमहंपदार्थयोः भेदः नायं दोषः । त्वं पदस्य खण्डप्रत्यगात्मार्थकत्वात् । अहंपदस्य तत्त्वमसिवाक्यार्थज्ञानोदयानन्तरं अखण्डब्रह्मयोगाभ्यासार्थं ग्राह्यत्वेन अखण्डप्रत्यगात्मार्थकत्वाच्च त्वमहंपदयोः भेदस्य विस्पष्टत्वात् । तस्मादत्र उक्तयोगिनः सद्योमुक्त्यभावेन औपचरिकपरमत्त्वेन च प्रकृतवाक्यानि अर्थवादा एव । तथापि स्वदेहान्तर्वर्तिज्योतिदर्शनं विना तत्त्वमसि इति उपदिशतामहं ब्रह्मास्मीति वाङ्मात्रेण प्रलपतां च भ्रान्ततमानां कल्पकोटिष्वपि संसारबन्धान्मोक्षासम्भवात् मोक्षप्रथमसाधनत्वाच्चास्य दर्शनस्य उपेक्षा न कदापि कार्या इति स्थितं ॥ १२-१८॥

## Text

ग्रन्थाभ्यासफलम्

यः सकृदुच्चारयति तस्य संसारमोचनं भवति । सर्वजन्मकृतं पापं तत्क्षणादेव नश्यति । सर्वान् कामानवाप्नोति । सर्वपुरुषार्थसिद्धिर्भवति । य एवं वेदेत्युपनिषत् ॥ १९॥

## Commentary I.

ग्रन्थतदर्थपठनानुसन्धानफलमहा -- य इति ॥
कामाकामधियां
पठनफलं सर्वकामाप्तिः परमपुरुषार्थाप्तिश्च ।
इत्युपनिषच्छब्दः अद्वयतारकोपनिषत्समाप्त्यर्थः ॥ १९॥
श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
अद्वयोपनिषद्व्याख्या लिखितेश्वरगोचरा ।
अद्वयोपनिषद्व्याख्याग्रन्थोऽशीतिरितीरितः ॥

ॐ पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥
ॐ शान्तिः शान्तिः शान्तिः ।
इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे त्रिपञ्चाशत्सङ्ख्यापूरकं अद्वयतारकोपनिषद्विवरणण संपूर्णं ।
इति श्रीमत्सुन्दरेश्वरतातााचार्यशिष्याप्पयशिवाचार्यकृतिषु अद्वयतारकोपनिषद्भाष्यं समाप्तं ॥ ॐ ॥
ॐ श्रीमद्विश्वाधिष्ठनपरमहंससद्गुरुरामचन्द्रार्पणमस्तु ॥

---